॥ कलिसन्तरणोपनिषत् ॥

(कृष्णयजुर्वेदीया)

ॐ सह नाववतु । सह नौ भुनक्तु ।
सह वीर्यङ्करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ।
ॐ शान्तिः शान्तिः शान्तिः ।

(भगवन्नामस्मरणमात्रेण कलिसन्तरणम्)

हरिः ॐ । द्वापरान्ते नारदो ब्रह्माणं जगाम कथं भगवन् गां पर्यटन् कलिं सन्तरेयमिति ।
स होवाच ब्रह्मा साधु पृष्टोऽस्मि सर्वश्रुतिरहस्यं गोप्यं तच्छृणु येन कलिसंसारं तरिष्यसि ।
भगवत आदिपुरुषस्य नारायनस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवतीति ॥ १॥

(परब्रह्मावरणविनाशकषोडशनामानि)

नारदः पुनः पप्रच्छ तन्नाम किमिति । स होवाच हिरण्यगर्भः ।

हरे राम हरे राम राम राम हरे हरे ।

हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥

इति षोडशकं नाम्नां कलिकल्मषनाशनम् ।

नातः परतरोपायः सर्ववेदेषु दृश्यते ॥

षोडशकलावृतस्य जीवस्यावरणविनाशनम् ।
ततः प्रकाशते परं ब्रह्म मेघापाये रविरश्मिमण्डलीवेति ॥ २॥

(नामजपमहिमा)

पुनर्नारदः पप्रच्छ भगवन् कोऽस्य विधिरिति ।
तं होवाच नास्य विधिरिति ।
सर्वदा शुचिरशुचिर्वा पठन् ब्राह्मणः सलोकतां समीपतां

सरूपतां सायुज्यमेति ।
यदास्य षोडशकस्य सार्धत्रिकोटीर्जपति तदा ब्रह्महत्यां तरति ।
तरति वीरहत्याम् ।
स्वर्णस्तेयात् पूतो भवति ।
वृषलीगमनात् पूतो भवति ।
पितृदेवमनुष्याणामपकारात् पूतो भवति ।
सर्वधर्मपरित्यागपापात् सद्यः शुचितामाप्नुयात् ।
सद्यो मुच्यते सद्यो मुच्यते इत्युपनिषत् ॥ ३॥

ॐ सह नाववतु । सह नौ भुनक्तु ।
सह वीर्यङ्करवावहै ।
तेजस्विनावधीतमस्तु मा विद्विषावहै ।
ॐ शान्तिः शान्तिः शान्तिः ।